नयोग्यम्—अनुपारिहारिकं पारिहारिकानुकूलवर्त्तिनं कञ्चित्साधुम् 'ठवइत्ता' स्थापयित्वा—नियतं कृत्वा अनुपारिहारिकेण वैयावृत्यकारेण च 'करणिज्जं वेयावडियं' करणीयं वैयावृत्यम्, अस्य परिहारतपसि वर्तमानस्य यथायोग्यमनुशिष्टयुपालम्भोपग्रहलक्षणं वैयावृत्यं करणीयम्। 'ठाविएवि पडिसेवित्ता' स्थापितेऽपि—अनुशिष्टयुपालम्भादिभिः क्रियमाणेऽपि वैयावृत्ये प्रतिसेविता कदाचित् किमपि अपराधस्थानं प्रतिसेवको भवेत् पापस्थानं सेवेत कथयेच्च हे भगवन्! अहममुकं प्रायश्चित्तस्थानमापन्न', ततस्तस्य 'सेवि' तदपि तत्सम्बन्ध्यपि प्रायश्चित्तम् 'कसिणे' कृत्स्नम् सर्वं पूर्वसेवित सम्प्रति सेवितं चेति द्वयमपि 'तत्थेव' तत्रैव परिहारतपस्येव 'आरुहियव्वे सिया' आरोपयितव्य स्यात् सर्वं समेलनीयमित्यर्थः, अत्र पापस्थानस्य पूर्वपश्चात्सेवनाविषयां चतुर्भङ्गीं दर्शयितुमाह—'पुव्विं' इत्यादि, 'पुव्विं पडिसेवियं पुव्विं आलोइयं' पूर्वं प्रतिसेवितं—पूर्वमालोचितम् १, अत्र पूर्वमित्यत्र पदैकदेशे पदसमुदायोपचारात् पूर्वानुपूर्व्या इति ज्ञातव्यम्, ततश्चायमर्थः गुरुलघुपर्यालोचनया पूर्वानुपूर्व्या लघुपञ्चकादिक्रमेण यत् प्रतिसेवितम् तत् पूर्वं पूर्वानुपूर्व्या प्रतिसेवनानुक्रमेण आलोचितमिति प्रथमो भङ्ग १। द्वितीयभङ्गमाह—'पुव्विं पडिसेवियं पच्छा आलोइयं' पूर्वं प्रतिसेवित पश्चादालोचितम्—पूर्वं गुरुलघुपर्यालोचनया पूर्वानुपूर्व्या मासलघुकादि प्रतिसेवितम् तदनन्तर च तथाविधाल्पप्रयोजनोत्पत्तौ प्रमादादिना गुरुलघुपर्यालोचनयैव लघुपञ्चकादि प्रतिसेवितम् आलोचनासमये च पश्चात्-पश्चानुपूर्व्या आलोचितम्—यथा—पूर्वं लघुपञ्चकाद्यालोचितम् पश्चात् लघुमासिकादिकमालोचितमिति द्वितीयो भङ्गः २। अथ तृतीयभङ्ग दर्शयितुमाह—'पच्छा पडिसेवियं' इत्यादि 'पच्छा पडिसेवियं पुव्विं आलोइयं' पश्चात्प्रतिसेवितं पूर्वमालोचितम्, तत्र पश्चानुपूर्व्या प्रतिसेवितं गुरुलघुपर्यालोचनामन्तरेण पूर्वं गुरुमासादिक प्रतिसेवितम् पश्चात् लघुपञ्चकादीति आलोचनासमये आनुपूर्व्या नालोचितम् पूर्वं लघुपञ्चकाद्यालोचितम् पश्चात् तदनन्तरं गुरुमासादिकमालोचितमिति तृतीयो भङ्ग ३। अथ चतुर्थं भङ्गमाह—'पच्छा पडिसेवियं' इत्यादि। 'पच्छा पडिसेविय पच्छा आलोइयं' पश्चात्प्रतिसेवितं पश्चादालोचितम्, तत्र पश्चानुपूर्व्या प्रतिसेवितं गुरुलघुपर्यालोचनादिविरहित यथाकथंचन प्रतिसेवितमिति पश्चात् पश्चानुपूर्व्या आलोचितं प्रतिसेवनानुक्रमेणैव आलोचितम्, अथवा स्मृत्वा स्मृत्वा यथाकथंचनापि आलोचितमिति चतुर्थो भङ्गः ४। अत्र प्रथमचतुर्थभङ्गौ अप्रतिकुञ्चनायाम्, द्वितीयतृतीयभङ्गौ तु प्रतिकुञ्चनायामिति अप्रतिकुञ्चित-प्रतिकुञ्चिताभ्यामियं चतुर्भङ्गी कृतेति। तामेव अप्रतिकुञ्चिते अप्रतिकुञ्चितम्, इत्येतद्विषयां चतुर्भङ्गीं दर्शयितुमाह—'अपलिउंचिए अपलिउंचियं' इत्यादि, 'अपलिउंचिए अपलिउंचियं' अप्रतिकुञ्चिते अप्रतिकुञ्चितम्, यदा खलु अतिचारान् प्राप्तवान् आलोचनाकाले आलोचनाभिमुखो भवेत्तदा स एवं संकल्पयति यथा ये केचन मयि अतिचाराः जातास्ते सर्वेऽपि अतिचारा मया आलोचनीयाः न कोऽपि गोप-

नीयः, एवं पूर्वसंकल्पकाले अप्रतिकुञ्चिते आलोचनासमये अप्रतिकुंचितमेव आलोचयतीति प्रथमो भङ्गः १, अथ द्वितीयभङ्गमाह–**'अपलिउंचिए पलिउंचियं'** इति. **'अपलिउचिए पलिउंचियं'** अप्रतिकुञ्चिते प्रतिकुञ्चितम् यथा–पूर्वं संकल्पकाले आलोचनाविचारकाले अप्रतिकुञ्चितम्–निष्कपटभावेन समुपस्थित आलोचनासमये तु प्रतिकुञ्चितं कपटभावेन आलोचयतीति द्वितीयो भङ्ग २, अथ तृतीयभङ्गमाह **'पलिउंचिए अपलिउंचियं'** प्रतिकुञ्चिते अप्रतिकुञ्चितम् पूर्वसंकल्पकाले प्रतिकुञ्चितम् यथा मया न सर्वे अतिचारा आलोचनीया' एवंप्रकारेण पूर्वसंकल्पकाले प्रतिकुञ्चिते आलोचनासमये अन्तःकरणस्य परावर्तनात् अप्रतिकुञ्चितम्- कपटरहित यथा स्यात् तथा आलोचयतीति तृतीयो भङ्गः ३। अथ चतुर्थभङ्गमाह–**'पलिउंचिए पलिउंचियं'** प्रतिकुञ्चिते प्रतिकुञ्चितम्, पूर्वसंकल्पकाले पापस्थानप्रतिसेवकेन प्रतिकुञ्चितं यथा मया न सर्वे अपराधा आलोचनीया., तत एवंप्रकारेण संकल्पकाले प्रतिकुंचिते ततः आलोचनाकरणसमयेऽपि प्रतिकुञ्चितं सकपटमेव आलोचयतीत्येष चतुर्थो भङ्गः ४। एषु चतुर्षु भङ्गेषु मध्ये यत् **'अपलिउंचिए अपलिउंचियं'** अप्रतिकुञ्चिते अप्रतिकुञ्चितम् पूर्वं संकल्पकाले निष्कपटेन संकल्पितम् आलोचनाग्रहणकालेऽपि निष्कपटपूर्वकम् **'आलोएमाणस्स'** आलोचयत , ततश्चायमर्थ - यावन्तोऽतिचारा. प्रतिसेविताः तान् सर्वानेव निरवशेषमालोचयतः श्रमणादेः **'सव्वमेयं'** सर्वमेतत् यत् यदा यत्तदपराधजातम्, यदि वा कथमपि प्रतिकुञ्चना कृता स्यात् तत. प्रतिकुञ्चनानिष्पन्न, यच्च गुरुणा सहालोचनाकाले उच्चासनतुल्यासनोपवेशनादिजनित तथा या च आलोचनासमये असमाचारी सेविता तन्निष्पन्नं च सकलमेतत् अपराधकारिणा प्रायश्चित्त प्रतिसेवकेन श्रमणादिना **'सकयं'** स्वकृतम्–स्वयमेव आत्मना प्रतिसेवितम् आत्मनैव कृतम् **'साहणिय'** संहृत्य–एकत्र मीलयित्वा, तथा पुनश्च **'ज एयाए'** यत् एतया अनन्तरपूर्वकथितया षाण्मासिक्या एकमासिकादिकया वा **'पट्ठवणाए'** प्रस्थापनया पूर्वकाले कृतस्यातिचारस्य विषये या प्रस्थापना प्रायश्चित्तदानरूपा तया प्रस्थापनया **'पट्ठविए'** प्रस्थापित –प्रायश्चित्तकरणे नियोजित **'निव्विसमाणे'** निर्विशमानः तपसो निस्सरन् प्रायश्चित्तस्य चरमं तप सेवमान तप समाप्य ततो निवर्त्तयन्नित्यर्थः यत् पुनः प्रमादतो विषयकषायादिभिर्वा **'पडिसेवइ'** प्रतिसेवते–पापस्थानस्य प्रतिसेवनां करोति तस्यां प्रतिसेवनायां यत् प्रायश्चित्तं प्राप्यते **'सेवि कसिणे'** तदपि कृत्स्नम्–तदपि सर्वं प्राश्चित्तम् **'तत्थेव'** तत्रैव–पूर्वप्रस्थापिते एव प्रायश्चित्ते **'आरुहियव्वे सिया'** आरोपयितव्यं स्यात् सर्वमेकत्र संमेलनीयमित्यर्थः ॥ सू० १७॥

**सूत्रम्—जे भिक्खू बहुसोवि मासियं वा, बहुसोवि साइरेगमासियं वा बहुसोवि दोमासियं वा बहुसोवि साइरेगदोमासियं वा**

बहुसोवि तेमासियं वा बहुसोवि साइरेगतेमासियं वा बहुसोवि चाउम्मासियं वा बहुसोवि साइरेगचाउम्मासियं वा बहुसोवि पचंमासियं वा बहुसोवि साइरेगपंचमासियं वा, एएसिं परिहारट्ठाणाणं अण्णयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स ठवणिज्जं ठावइत्ता करणिज्जं वेयावडियं ठाविए वि पडिसेवित्ता से वि कसिणे तत्थेव आरुहियव्वे सिया, पुव्वं पडिसेवियं पुव्वं आलोइयं १, पुव्वं पडिसेवियं पच्छा आलोइयं २, पच्छा पडिसेवियं पुव्वं आलोइयं ३, पच्छा पडिसेवियं पच्छा आलोइयं ४। अपलिउंचिए अपलिउंचियं १, अपलिअंचिए पलिउंचियं २, पलिउंचिए अपलिउंचियं ३, पलिउंचिए पलिउंचियं ४। अपलिउंचिए अपलिउंचियं आलोएमाणस्स सव्वमेयं सकयं साहणिय जे एयाए पट्ठवणाए पट्ठविए निव्विसमाणे पडिसेवेइ सेवि कसिणे तत्थेव आरुहियव्वे सिया॥ सू० १८॥

जे भिक्खू मासियं वा साइरेगमासियं वा दोमासियं वा साइरेगदोमासियं वा तेमासियं वा साइरेगतेमासियं वा चाउम्मासियं वा साइरेगचाउम्मासियं वा पंचमासियं वा साइरेगपंचमासियं वा, एएसिं परिहारट्ठाणाणं अण्णयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा पलिउंचिय आलोएमाणस्स ठवणिज्जं ठावइत्ता करणिज्जं वेयावडियं ठाविए वि पडिसेवित्ता सेवि कसिणे तत्थेव आरुहियव्वे सिया, पुव्विं पडिसेवियं पुव्विं आलोइयं १, पुव्विं पडिसेवियं पच्छा आलोइयं २, पच्छापडिसेवियं पुव्विं आलोइयं ३, पच्छापडिसेवियं पच्छाआलोइयं४, अपलिउंचिए अपलिउंचियं १, अपलिउंचिए पलिउंचियं २, पलिउंचिए अपलिउंचियं ३, पलिउंचिए पलिउंचियं ४, पलिउंचिए पलिउंचियं आलोएमाणस्स सव्वमेयं सकयं साहणिय जे एयाए पट्ठवणाए पट्ठविए णिव्विसमाणे पडिसेवइ से वि कसिणे तत्थेव आरुहियव्वे सिया ॥ सू० १९॥

जे भिक्खू बहुसोवि मासियं वा बहुसोवि साइरेगमासियं वा बहुसोवि दोमासियं वा बहुसोवि साइरेगदोमासियं वा बहुसोवि तेमासियं वा बहुसोवि साइरेगतेमासियं वा बहुसोवि चाउम्मासियं वा बहुसोवि साइरेगचाउम्मासियं वा बहुसोवि पंचमासियं वा बहुसोवि साइरेगपंचमासियं वा एएसिं परिहारट्ठाणाणं अण्णयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा पलिउंचिय आलोएमाणस्स ठवणिज्जं ठावइत्ता करणिज्जं वेयावडियं ठाविएवि पडिसेवित्ता सेवि कसिणे तत्थेव आरुहियव्वे सिया पुव्विं पडिसेवियं पुव्विं आलोइयं १, पुव्विं पडिसेवियं पच्छा आलोइयं २, पच्छा पडिसेवियं पुव्विं आलोइयं ३, पच्छापडिसेवियं पच्छा आलोइयं ४। अपलिउंचिए अपलिउंचियं १, अपलिउंचिए पलिउंचियं २, पलिउंचिए अपलिउंचियं ३, पलिउंचिए पलिउंचियं ४। पलिउंचिए पलिउंचियं आलोएमाणस्स सव्वमेयं सकयं साहणिय जे एयाए पट्ठवणाए पट्ठविए निव्विसमाणे पडिसेवेइ सेवि कसिणे तत्थेव आरुहियव्वे सिया॥ सू० २०॥

छाया—यो भिक्षुर्बहुशोऽपि मासिकं वा बहुशोऽपि सातिरेकमासिकं वा, बहुशोऽपि द्वैमासिकं वा बहुशोऽपि सातिरेकद्वैमासिकं वा, बहुशोऽपि त्रैमासिकं वा बहुशोऽपि सातिरेकत्रैमासिकं वा बहुशोऽपि चातुर्मासिकं वा बहुशोऽपि सातिरेकचातुर्मासिकं वा बहुशोऽपि पाञ्चमासिकं वा बहुशोऽपि सातिरेकपाञ्चमासिकं वा, एतेषां परिहारस्थानानाम् अन्यतमं परिहारस्थानं प्रतिसेव्य आलोचयेत् अप्रतिकुञ्च्य आलोचयत स्थापनीयं स्थापयित्वा करणीयं वैयावृत्त्यम्, स्थापितेऽपि प्रतिसेव्य तदपि कृत्स्नं तत्रैव आरोहयितव्यं स्यात्, पूर्वं प्रतिसेवितं पूर्वमालोचितम् १, पूर्वं प्रतिसेवितं पश्चादालोचितम् २, पश्चात् प्रतिसेवितं पूर्वमालोचितम् ३, पश्चात्प्रतिसेवितं पश्चादालोचितम् ४। अपरिकुञ्चिते अपरिकुञ्चितम् १, अपरिकुञ्चिते परिकुञ्चितम् २ परिकुञ्चिते अपरिकुञ्चितम् ३, परिकुञ्चिते परिकुञ्चितम् ४। अपरिकुञ्चिते, अपरिकुञ्चितम् आलोचयतः सर्वमेतत् स्वकृतं संहृत्य य एतया प्रस्थापनया प्रस्थापितो निर्विशमानः प्रतिसेवते तदपि कृत्स्नं तत्रैव आरोहयितव्यं स्यात् ॥ सू० १८ ॥

यो भिक्षुर्मासिकं वा सातिरेकमासिकं वा द्वैमासिकं वा सातिरेक द्वैमासिकं वा त्रैमासिकं वा सातिरेकत्रैमासिकं वा चातुर्मासिकं वा सातिरेकचातुर्मासिकं वा पाञ्चमासिकं वा सातिरे-

कपाञ्चमासिकं वा एतेषां परिहारस्थानानाम् अन्यतम परिहारस्थानं प्रतिसेव्य आलोचयेत् परिकुञ्च्य आलोचयतः स्थापनीयं स्थापयित्वा करणीयं वैयावृत्यं, स्थापितेऽपि प्रतिसेव्य तदपि कृत्स्नं तत्रैव आरोहयितव्य स्यात्, पूर्वं प्रतिसेवितं पूर्वमालोचितम् १, पूर्वं प्रतिसेवितं पश्चादालोचितम् २, पश्चात्प्रतिसेवितं पूर्वमालोचितम् ३ पश्चात्प्रतिसेवितं पश्चादालोचितम् ४। अप्रतिकुञ्चिते अप्रतिकुञ्चितम् १, अप्रतिकुञ्चिते प्रतिकुञ्चितम् २, प्रतिकुञ्चिते अप्रतिकुञ्चितम् ३, प्रतिकुञ्चिते प्रतिकुञ्चितम् ४। प्रतिकुञ्चिते प्रतिकुञ्चितमालोचयत सर्वमेतत् स्वकृतं संहृत्य य एतया प्रस्थापनया प्रस्थापितो निर्विशमान प्रतिसेवते तदपि कृत्स्नं तत्रैव आरोहयितव्यं स्यात् ॥ सू० १९॥

यो भिक्षुर्बहुशोऽपि मासिकं वा बहुशोऽपि सातिरेकमासिकं वा बहुशोऽपि द्वैमासिक वा बहुशोऽपि सातिरेकद्वैमासिक वा बहुशोऽपि त्रैमासिक वा बहुशोऽपि सातिरेकत्रैमासिकं वा बहुशोऽपि चातुर्मासिकं वा बहुशोऽपि सातिरेकचातुर्मासिकं वा बहुशोऽपि पाञ्चमासिकं वा बहुशोऽपि सातिरेकपाञ्चमासिकं वा, एतेषां परिहारस्थानानामन्यतमम् परिहारस्थानं प्रतिसेव्य आलोचयेत् प्रतिकुञ्च्य आलोचयत स्थापनीयं स्थापयित्वा करणीयं वैयावृत्य स्थापितेऽपि प्रतिसेव्य तदपि कृत्स्नं तत्रैव आरोहयितव्यं स्यात्, पूर्वं प्रतिसेवितं पूर्वमालोचितम् १, पूर्वं प्रतिसेवितं पश्चादालोचितम् २, पश्चात्प्रतिसेवितं पूर्वमालोचितम् ३, पश्चात्प्रतिसेवितं पश्चादालोचितम् ४ । अप्रतिकुञ्चिते अप्रतिकुञ्चितम् १, अप्रतिकुञ्चिते प्रतिकुञ्चितम् २, प्रतिकुञ्चिते अप्रतिकुञ्चितम् ३, प्रतिकुञ्चिते प्रतिकुञ्चितम् ४। प्रतिकुञ्चिते प्रतिकुञ्चितमालोचयत सर्वमेतत् स्वकृतं संहृत्य य एतया प्रस्थापनया प्रस्थापितो निर्विशमान प्रतिसेवते तदपि कृत्स्न तत्रैव आरोहयितव्य स्यात् ॥सू० २०॥

**चूर्णी** – इदं सूत्रत्रयं ( १८–१९–२० ) बहुश सातिरेकेति सयोगरूपं प्रायश्चित्तारोपणाविषयकं बहुश सातिरेकेति सयोगमधिकृत्य पूर्ववदेव व्याख्येयम् ।

पूर्वोक्तानां सर्वेषां परिहारस्थानसेवनविषयकप्रायश्चित्तसूत्राणामुपसहारं वक्तुकामो भाष्यकारः पूर्वसूत्रातिदेशेन प्राह—

**सुत्तविभासा जा उ, हिट्ठिमसुत्तेसु सोलसेसु य ।**
**सा चेव इहं णेया, ठवणा परिहार णाणत्तं ॥ १ ॥**

**छाया**—सूत्रविभाषा या तु अधस्तनसूत्रेषु षोडशसु च ।
सैव इह ज्ञातव्या, स्थापना-परिहार-नानात्वम् ॥१॥

**अवचूरिः** या तु सूत्रविभाषा 'जे भिक्खू' इत्यादि सूत्रावयवव्याख्या एकद्विकत्रिकादिसंयोगप्रदर्शनस्वरूपा अधस्तनसूत्रेषु–आद्यसूत्रेषु षोडशसङ्ख्यकेषु वर्णिता सा एव विभाषा इह उपरितनेषु सप्तदशादारभ्य 'बहुसोवि साइरेग' इति सयोगसूत्रपर्यन्तेष्वपि सूत्रेषु ज्ञातव्या वक्तव्येत्यर्थ. । अथ यदि सैव वक्तव्यता इहापि तदा पूर्वसूत्रेभ्य एतेषां सूत्राणां को विशेषस्तत्राह–

'**ठवणा**' इत्यादि, स्थापनापरिहारनानात्वं–स्थापनापरिहारविषये भेदो ज्ञातव्य, अयं भावः– अधस्तनपूर्वसूत्रेषु आदितः षोडशसूत्रपर्यन्तसूत्रेषु परिहारतपो न कथितम्, इह तु सप्तदश- सूत्रादनन्तरसूत्रेषु परिहारतपस· प्रतिपादन कृतम्, इत्येतावानेव विशेष इति ॥ सू० १८–२० ॥

इदानीं मासादौ प्रस्थापिते अन्तरा यदन्यदिनमासादिपापस्थान प्रतिसेवते तत्र यस्मिन् पापस्थाने दिवसग्रहणप्रमाणं प्रस्थापित स्थापनारूपं भण्यते तदेव दर्शयति–'**छम्मासियं** इत्यादि ।

**सूत्रम्—छम्मासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा वीसइराइया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं सवीसइराइया दो मासा ॥ सू० २१ ॥**

**छाया षाण्मासिकं परिहारस्थान प्रस्थापितोऽनगारः अन्तरा द्वैमासिकं परिहारस्थान प्रतिसेव्य आलोचयेत् अथापरा विंशतिरात्रिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनातिरिक्तं तेन पर सविंशतिरात्रौ द्वौ मासौ ॥ सू० २१ ॥**

चूर्णी— '**छम्मासियं**' इत्यादि । '**छम्मासियं**' षाण्मासिकम् तत्र षडिति संख्या- विशेषलक्षण मासिकम्, तत्र मानानि समयावलिकादीनि असतीति मासः, मासो मासा- न्तक. काल परिमाणमस्येति मासिकम्, षड्भिर्मासै निष्पन्नं यत् तत् षाण्मासिकम् '**परिहारट्ठाणं**' परिहारस्थानम्–परिहारस्य स्थानं परिहारस्थानम्-सावद्यकर्मणामनुष्ठानल- क्षणम् तत्प्रति '**पट्ठविए**' प्रस्थापितः अशुभकर्मणा क्षयार्थं स्थापित प्रायश्चित्तं वह- मान इत्यर्थ· '**अणगारे**' अनगार -श्रमण श्रमणी वा '**अंतरा दोमासियं परिहारट्ठाणं पडि- सेवित्ता**' अन्तरा द्वैमासिकं परिहारस्थानं प्रतिसेव्य तत्र अन्तरा मध्ये समारब्धप्रायश्चित्तस्य मध्ये इत्यर्थः द्वैमासिकम्–मासद्वयेन संपादनयोग्यं परिहारस्थानं पापस्थानम् '**पडिसेवित्ता**' प्रतिसेव्य–प्रायश्चित्तकरणसमयेऽपि द्वैमासिकप्रायश्चित्तस्थानस्य प्रतिसेवनं कृत्वा '**आलोएज्जा**' आलोचयेत् कृतपापकर्मण आलोचनां गुरवे दर्शयेत् । तत्र मायारहितभावेन आलोचनां कुर्वतः '**अहावरा वीसइराइया आरोवणा**' अथापरा विंशतिरात्रिकी आरोपणा, तत्र अथेत्ययमानन्त- र्यार्थको निपात', अपरा–मासद्वयादन्या, यदि अयं षाण्मासिकं तपो वहन् मध्ये द्वैमासिकं परिहारस्थान प्रतिसेवते प्रतिसेव्य मायारहितमालोचयेत् तदा गुरुः तस्मै प्रतिसेवितमासद्वयोपरि- विंशतिरात्रिकी आरोपणा कर्तव्या विंशतिरात्रिसम्पादनीयप्रायश्चित्तं वर्धयेदिति भावः । षण्णां मासानां त्रिभागं कृत्वा तत्र भागद्वयं परित्यजेत्, एकं भागं मासद्वयप्रमाणं प्रायश्चित्तं पुनरपरं दद्यात् तदेव मासद्वयसम्पाद्यं प्रायश्चित्तं संमीलयित्वा विंशतिरात्रिकं प्रायश्चित्तं दद्यात् ।

तत्र रात्रिग्रहणमहोरात्रस्योपलक्षणम् रात्रावेव अहोरात्रस्य परिसमाप्तेः तदयं निष्कर्षार्थः प्रचलितषाण्मासिकप्रायश्चित्ते एव पुनरपि द्वैमासिकपरिहारस्थानप्रतिसेवकाय विंशत्यहोरात्रप्रमाणकं पुनरपि प्रायश्चित्तं दद्यात्—षण्मासस्य द्वौ द्वौ भागौ परित्याज्यौ एकैको भागो ग्रहीतव्यः, तावता मासद्वययुक्तविंशत्यहोरात्रप्रमाणकमेव प्रायश्चित्तमापन्नं भवति । षण्मासभागत्रयं विशदयति—षण्मासस्य द्विद्विभागरूपेषु त्रिषु भागेषु 'आइमज्झावसाणे' आदिमध्यावसाने षण्मासस्य आदौ मध्ये अवसाने च द्विभागरूपे 'सअट्ठं' सार्थम्—तत्र अर्थः प्रयोजनम् येन प्रयोजनेन प्रयुक्तः सन् तदाचरितम् तेन प्रयोजनेन सहितम् 'सहेउं' सहेतुम् , तत्र हेतुः सामान्यकारणम् , येन हेतुना प्रयुक्त सन तदाचरित तत्सहितम् 'सकारणं' सकारणम्, विशेषार्थहेतुकारणै. प्रयुक्तः सन् तदाचरितं मासद्वयात्मकं परिहारस्थानम् तत्सर्वं सपूर्णं षाण्मासिकसम्बन्धिद्विमासम् विंशत्यहोरात्राणां त्रिवारकरणात् , तच्च 'अहीणमइरित्त' अहीनमतिरिक्तम् न हीन न्यूनं नातिरिक्तं नाधिकम् एकद्विदिनादिनापि न न्यून नाप्यधिकं संपूर्णमेव । अयं भाव —यदि प्रचलितषाण्मासिकप्रायश्चित्तकरणावसरे केनापि कारणादिना पुनरपि मासद्वयात्मकपरिहारस्थानस्य प्रतिसेवन करोति कृत्वा चाकपटमालोचयेत् तदा विंशत्यहोरात्रैर्द्विमासादपरम् प्रायश्चित्तं दद्यात् विंशत्यहोरात्राधिक संपूर्णमासद्वयं प्रायश्चित्त दद्यादिति, अतएव 'तेण परं सवीसइराइया दो मासा' तेन परं तस्मात्षण्मासादुपरीत्यर्थ सविंशतिरात्रिकौ द्वौ मासौ प्रायश्चित्तत्वेन भवत तत्र न किञ्चिदपि ह्रातव्यमिति भाव ॥ सू० २१ ॥

सूत्रम्—पंचमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा दोमामासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा वीसइराइया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमतिरित्तं तेण परं सवीसराइया दा मासा ॥ सू० २२ ॥

चाउम्मासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा वीसइराइया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं सवीसइराइया दो मासा ॥ सू० २३ ॥

तेमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा वीसइराइया आरो-

वणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं सवीसइराइया दो मासा ॥ सू०२४ ॥

दोमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा वीसइराइया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं सवीसइराइया दो मासा ॥ सू० २५॥

मासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा वीसइराइया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं सवीसइराइया दोमासा ॥ सू० २६ ॥

छाया पाञ्चमासिकं परिहारस्थानं प्रस्थापितोऽनगार अन्तरा द्वैमासिक परिहारस्थानं प्रतिसेव्य आलोचययेत् अथापरा विंशतिरात्रिकी आरोपणा आदिमध्यावसाने सार्थं सहेतु सकारणमहीनमतिरिक्तं तेन पर सविंशतिरात्रिकौ द्वौ मासौ ॥ सू० २२ ॥

चातुर्मासिकं परिहारस्थानं प्रस्थापितोऽनगारः अन्तरा द्वैमासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा विंशतिरात्रिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्त तेन परं सविंशतिरात्रिको द्वौ मासौ ॥ सू० २३ ॥

त्रैमासिकं परिहारस्थानं प्रस्थापितोऽनगारः अंतरा द्वैमासिक परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा विंशतिरात्रिकी आरोपणा आदिमध्यावसाने सार्थं सहेतु सकारणमहीनमतिरिक्तम् तेन पर सविंशतिरात्रिकौ द्वौ मासौ ॥ सू० २४॥

द्वैमासिक परिहारस्थान प्रस्थापितोऽनगारः द्वैमासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा विंशतिरात्रिकी आरोपणा सार्थं सहेतु सकारणमहीनमतिरिक्त तेन परं सविंशतिरात्रिकौ द्वौ मासौ ॥ सू० २५ ॥

मासिक परिहारस्थान प्रस्थापितोऽनगारोऽन्तरा द्वैमासिक परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा विंशतिरात्रिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्तम् तेन परं सविंशतिरात्रिकौ द्वौ मासौ २६ ॥ सू० २२-२६ ॥

चूर्णी—एतानि पाञ्चमासिकपरिहारस्थानप्रस्थापितानगारस्य द्वैमासिकपरिहारस्थानसेवनसूत्रादारभ्य चातुर्मासिक० त्रैमासिक० द्वैमासिक० मासिकपरिहारस्थानप्रस्थापितानगारस्य द्वैमासिकपरिहारस्थानसेवनसूत्रपर्यन्तानि पञ्च सूत्राणि षाण्मासिकसूत्रवदेव पाञ्चमासिकादियथा-

योगं व्यत्ययेन व्याख्येयानि । विशेषस्त्वयम्—यत् आदिमध्यावसाने पश्चादिमासानां यथायोगं त्रयो भागाः करणीया इति ॥ सू० २२-२६ ॥

पूर्वं षाण्मासिकादिमासिकपर्यन्तपरिहारस्थानप्रस्थापिताऽनगारस्य द्वैमासिकपरिहारस्थान-सेवने सविंशतिरात्रिकद्विमासप्रायश्चित्तदानस्वरूप प्रदर्शितम्, अथ सविंशतिरात्रिकद्विमास-प्रायश्चित्तसेवनासमये तत्रापि यः कश्चित् साधुः पुनरपि द्वैमासिकपरिहारस्थानं सेवते तस्य प्रायश्चित्तविधिं दर्शयति— 'सवीसइराइयं' इत्यादि ।

**सूत्रम्—सवीसइराइयं दोमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा वीस-इराइया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं सदसराया तिण्णि मासा ॥ सू० २७॥**

छाया—सविंशतिरात्रिकं द्वैमासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा द्वैमा-सिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा विंशतिरात्रिकी आरोपणा आदिम-ध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्तं तेन परं सदशरात्रास्त्रयो मासाः ॥ सू०२७॥

चूर्णी— 'सवीसइराइयं' इत्यादि । 'सवीसइराइयं दोमासियं' सविंशतिरात्रिकं द्वैमा-सिकम्, तत्र विंशतिरात्रिभिः सहितमिति सविंशतिरात्रिकम्—विंशतिरात्र्यधिकं द्वैमासिकं मासद्वय-सपादनयोग्यम् 'परिहारट्ठाणं' परिहारस्थानम्—सावद्यकर्मानुष्ठानम्, एतादृशकर्मणां निराकरणाय तदनुकूलपरिहारतपसि 'पट्ठविए' प्रस्थापित आरोपितः 'अणगारे' अनगार—भिक्षुकः-श्रमणः श्रमणी वा 'अंतरा' अन्तरा—तन्मध्येऽपि 'दोमासियं परिहारट्ठाणं पडिसेवित्ता' द्वैमासिकं परि-हारस्थानं प्रतिसेव्य द्वैमासिकपापस्थानप्रतिसेवनं कृत्वा 'आलोएज्जा' आलोचयेत्—स्वकृतकर्मणः प्रकाशन कुर्यात् तदा 'अहावरा वीसइराइया आरोवणा' अथापरा—ततोऽन्या पूर्वं सेव्यमान-द्विमासादन्या विंशतिरात्रिकी आरोपणा, तत्र तादृशमपर द्वैमासिकं परिहारस्थानमासेव्य यदि अकपटमालोचयति तदा विंशत्यहोरात्रस्य प्रायश्चित्तं भवति । तच्च 'आइमज्झावसाणे' आदि-मध्यावसाने विंशतिदिवसात्मके प्रतिभागे 'सअट्ठं सहेउं सकारणं अहीणमइरित्तं' सार्थं सहेतुकं सकारण—महीनमतिरिक्तम् अन्यूनानधिकम् यत् यत् प्रतिसेवितं तत्सर्वमेव दातव्यं प्रायश्चित्त-रूपेण । 'तेण परं' तेन ततः परं प्रस्थापितद्वैमासिकप्रायश्चित्तस्य विंशतिरात्रिकारोपणासहित-सविंशतिरात्रिकं सर्वसकलितं प्रायश्चित्तम् 'सदसराया तिण्णि मासा' सदशरात्रास्त्रयो मासाः—दशाहोरात्रसहितास्त्रयो मासाः प्रायश्चित्तस्य भवन्तीति ॥ सू० २७ ॥

**सूत्रम्—सदसराइयं तेमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा वीसइराइया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं चत्तारि मासा ॥ सू० २८॥**

छाया सदशरात्रिक त्रैमासिकं परिहारस्थानं प्रस्थापितोऽनगारः अन्तरा द्वैमासिकम् परिहारस्थान प्रतिसेव्य आलोचयेत् अथापरा विंशतिरात्रिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्तं तेन पर चत्वारो मासाः ॥ सू० २८ ॥

चूर्णी—'सदसराइयं' इत्यादि । 'सदसराइयं तेमासियं' सदशरात्रिकं त्रैमासिकम्—दशाहोरात्रसहित त्रैमासिक पूर्वसूत्रोक्तम् 'परिहारट्ठाणं' परिहारस्थानं सावद्यकर्मणामनुष्ठानलक्षणम्, तस्मिन् सदशरात्रिकत्रैमासिकपापनाशनाय परिहारतपसि 'पट्ठविए अणगारे' प्रस्थापितोऽनगार. प्रायश्चित्तकरणाय नियुक्तो भिक्षुक' यदि 'अंतरा' अन्तरा—मध्ये 'दोमासियं परिहारट्ठाणं' द्वैमासिकम् मासद्वयसंपादनीयं परिहारस्थानम् 'पडिसेवित्ता आलोएज्जा' प्रतिसेव्य प्रतिसेवनां कृत्वा आलोचयेत्—गुरुसमीपे आलोचनां कुर्यात् तदा 'अहावरा वीसइराइया आरोवणा' अथापरा विंशतिरात्रिकी आरोपणा कर्त्तव्या प्रकृतप्रायश्चित्तादतिरिक्ता विंशतिरात्रिप्रमाणा दातव्या । कथमित्याह—'आइमज्झावसाणे' आदिमध्यावसाने प्रत्येकभागे 'सअट्ठं सहेउं सकारणं अहीणमइरित्तं' सार्थं सहेतु सकारणमहीनमतिरिक्तं सर्वं सपूर्ण प्रायश्चित्तं दातव्यम् 'तेण परं चत्तारि मासा' तेन परम्—तत.—पूर्वसूत्रोक्तात्पर सदशरात्रिकमासद्वयविंशतिरात्रिकारोपणसंमेलनात्पर चत्वारो मासा प्रायश्चित्तरूपेण भवन्ति ॥ सू० २८ ॥

**सूत्रम्—चाउम्मासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा वीसइराइया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं सवीसइराइया चत्तारि मासा ॥ सू० २९॥**

छाया— चातुर्मासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा द्वैमासिकं परिहार स्थान प्रतिसेव्य आलोचयेत् अथापरा विंशतिरात्रिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्तं तेन परं सविंशतिरात्रिकाश्चत्वारो मासाः ॥ सू० २९ ॥

चूर्णी---'चाउम्मासियं' इत्यादि । 'चाउम्मासियं परिहारट्ठाणं' चातुर्मासिकं परिहारस्थानम्—मासचतुष्टयेन संपादनीयं पूर्वसूत्रोक्तं परिहारस्थानं प्रति 'पट्ठविए' प्रस्थापितः तस्मिन् चातुर्मासिकपरिहारस्थाने समुपस्थापित 'अणगारे' अनगारः, शेषं सर्वं पूर्वसूत्रवदेव व्याख्येयम्,

विशेषस्त्वयम्—अत्र सूत्रे सर्वे प्रायश्चित्तमारोपणासहितम् 'सवीसइराइया चत्तारि मासा' सविंशतिरत्रिका विंशत्यहोरात्रसहिताश्चत्वारो मासाः प्रायश्चित्तरूपेण भवन्तीति, शेषं पूर्ववदिति ॥ सू० २९॥

सूत्रम्—सवीसइराइयं चाउम्मासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा वीसइराइया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं सदसराइया पंच मासा ॥ सू० ३०॥

छाया—सविंशतिरात्रिकं चातुर्मासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा द्वैमासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा विंशतिरात्रिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्तं तेन परं सदशरात्रिका पञ्च मासाः ॥३०॥

चूर्णी—'सवीसइराइयं' इत्यादि । सवीसइराइयं चाउम्मासियं' सविंशतिरात्रिकं चातुर्मासिकम् विंशतिरात्रिसहितमासचतुष्टयसंपादनयोग्यम् 'परिहारट्ठाणं' परिहारस्थानम्, अत्र विंशत्यहोरात्रसहितेषु चतुर्षु मासेषु विंशत्यहोरात्रिकारोपणासंमेलने सर्वे 'सदसराइया पंच मासा' इति दशाहोरात्रसहिता पञ्च मासा' प्रायश्चित्तत्वेन भवन्ति, शेषं सर्वं पूर्ववदेव व्याख्येयमिति ॥ सू० ३०॥

सूत्रम्—सदसराइयं पंचमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा वीसइराइया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं छम्मासा ॥ सू० ३१॥

छाया—सदशरात्रिकं पाञ्चमासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा द्वैमासिक परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा विंशतिरात्रिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्तं तेन परं षण्मासा ॥३१॥

चूर्णी—'सदसराइयं' इत्यादि । 'सदसराइयं पंचमासिकं' सदशरात्रिकं पाञ्चमासिकम्, पूर्वसूत्रसंप्राप्तं दशाहोरात्रसहित पाञ्चमासिकम्, शेषं सर्वं पूर्ववद् व्याख्येयम्, विशेषस्त्वयम्—अत्र दशाहोरात्रिक पाञ्चमासिकप्रायश्चित्ते विंशतिरात्रिकी आरोपणा भवति 'तेण परं छम्मासा' ततः सर्वसंकलिता षड्मासा भवन्ति, न षण्मासादधिकं प्रायश्चित्तं भवतीति ॥ सू० ३१ ॥

अथ षाण्मासिकादिपरिहारस्थानप्रस्थापनायां मासिकपरिहारस्थानप्रतिसेवनायां पाक्षिकारोपणाविषयं प्रायश्चित्तविधिं प्रदर्शयति—'छम्मासियं' इत्यादि ।

सूत्रम्—छम्मासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा

आइमज्झावसाणे असट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं दिवड्ढो मासो ॥ सू० ३२॥

छाया—षाण्मासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्तं तेन परं द्व्यर्धो मासः ॥ सू० ३२॥

चूर्णी—'छम्मासियं' इत्यादि । 'छम्मासियं परिहारट्ठाणं' षाण्मासिकं परिहारस्थानम्—मासषट्केन संपादनयोग्यं परिहारस्थानं प्रतिसेव्य तत् पापनिराकरणाय षाण्मासिकपरिहारतपसि 'पट्ठविए अणगारे' प्रस्थापितोऽनगारः तादृशप्रायश्चित्तकरणाय तत्र नियोजितो भिक्षुः यदि 'अंतरा' अन्तरा–तन्मध्ये तादृशप्रायश्चित्तकरणावसरे प्रमादतो मोहनीयकर्मोदयाद्वा 'मासियं परिहारट्ठाणं' मासिकं परिहारस्थानं प्रतिसेवते 'पडिसेवित्ता' प्रतिसेव्य—मासिकपरिहारस्थानस्य प्रतिसेवनां कृत्वा तादृशकर्मणां विनाशाय 'आलोएज्जा' आलोचयेत्—स्वकृतपापस्य गुरुसमीपे प्रकाशनं कुर्यात् । तत्राकपटभावेन आलोचनां कुर्वतः श्रमणादेः 'अहावरा पक्खिया आरोवणा' अथापरा पाक्षिकी आरोपणा, अर्थात्—प्रायश्चित्तमध्ये पुनः प्रतिसेवितपरिहारस्थानस्यापनोदनाय मासमध्ये पञ्चदशदिवसस्यैव प्रायश्चित्तं दातव्यम्, कथमित्याह—'आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं' आदिमध्यावसाने सहेतुं सकारणमहीनमतिरिक्तम्—न न्यूनं नाधिकं परिपूर्णं प्रायश्चित्तं दातव्यम् न किञ्चिदपि परित्यक्तव्यम् । 'तेण परं दिवड्ढो मासो' तेन परं द्व्यर्धो मासः पञ्चदशदिवसाधिक एको मासः प्रायश्चित्तरूपेण भवति, अत्र पाक्षिकारोपणायाः सद्भावादिदिति ॥ सू० ३२ ॥

सूत्रम्—पंचमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं दिवड्ढो मासो ॥ सू० ३३॥

छाया—पाञ्चमासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्तं तेन परं द्व्यर्धो मासः ॥ सू० ३३॥

सूत्रम्—चाउम्मासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं दिवड्ढो मासो ॥ सू० ३४॥

छाया—चातुर्मासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्तं तेन परं द्व्यर्धो मासः ॥ सू० ३४॥

सूत्रम्—तेमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं दिवड्ढो मासो ॥ सू० ३५ ॥

छाया—त्रैमासिक परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतु सकारणमहीनमतिरिक्त तेन परं द्व्यर्धो मासः ॥ सू० ३५॥

सूत्रम्—दोमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं दिवड्ढो मासो ॥ सू० ३६ ॥

छाया—द्वैमासिक परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतु सकारणम् अहीनमतिरिक्त तेन परं द्व्यर्धो मासः ॥ सू०३६॥

सूत्रम्—मासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं दिवड्ढो मासो ॥ सू० ३७॥

छाया—मासिक परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा मासिक परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्त तेन परं द्व्यर्धो मासः ॥ सू० ३७।

चूर्णी - पूर्वं षाण्मासिकपरिहारस्थाने प्रस्थापितस्य तन्मध्ये मासिकपरिहारस्थानप्रतिसेवनायां पाक्षिकी आरोपणा तेन द्व्यर्धो मास· प्रायश्चित्तत्वेन भवतीत्युक्तं तथैव पाञ्चमासिक-चातुर्मासिक-त्रैमासिक-द्वैमासिक-मासिक-परिहारस्थानप्रस्थापितानगारस्यापि तन्मध्ये मासिकपरिहारस्थानप्रतिसेवनायां पाक्षिकी आरोपणा भवति तेन परं द्व्यर्धो मासः प्रायश्चित्तस्य भवतीति

पाञ्चमासिकादित आरम्भ मासिकपर्यन्तानि पञ्चापि सूत्राणि व्याख्येयानीति विरम्यते ॥ सू० ३७॥

तदेवं पूर्वोक्तेषु षाण्मासिकादिषु षट्सु सूत्रेषु द्व्यर्धो मासः प्रायश्चित्तत्वेन प्रतिपादितः । अथ यो द्व्यर्धमासिकपरिहारस्थानप्रस्थापित· सन् तन्मध्ये यदि मासिकपरिहारस्थानं प्रतिसेवते तद्विषयकं प्रायश्चित्तविधिमाह––'**दिवड्ढमासियं**' इत्यादि ।

**सूत्रम्—दिवड्ढमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं दो मासा ॥ सू० ३८ ॥**

**छाया—द्व्यर्धमासिक परिहारस्थान प्रस्थापितोऽनगारोऽन्तरा मासिक परिहारस्थान प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा सार्थं सहेतु सकारणमहीनमतिरिक्तं तेन पर द्वौ मासौ ॥ सू० ३८।**

चूर्णी—'**दिवड्ढमासियं**' इत्यादि । '**दिवड्ढमासियं**' द्व्यर्धमासिकम् द्वितीयोऽर्धो यत्र स द्व्यर्ध. स मासो यत्र तद् द्व्यर्धमासिकम् '**परिहारट्ठाणं**' परिहारस्थान पापप्रयोजकं कर्मानुष्ठानं तत्प्रति '**पट्ठविए** प्रस्थापित तादृशकर्मविनाशाय तादृशप्रायश्चित्तकरणाय नियोजित· '**अणगारे**' अनगारो–भिक्षुक· '**अंतरा**' अन्तरा–मध्ये '**मासियं परिहारट्ठाणं**' मासिक परिहारस्थानम् '**पडिसेवित्ता**' प्रतिसेव्य–परिहारस्थानप्रतिसेवनां कृत्वा '**आलोएज्जा**' आलोचयेत् तस्य '**अहावरा पक्खिया आरोवणा**' अथापरा पाक्षिकी पञ्चदशदिवसप्रमाणात्मिका आरोपणा प्रायश्चित्तदानरूपा प्रस्तुततप स्थापितप्रायश्चित्तादधिकं पाक्षिक प्रायश्चित्तं दातव्यम् । तच्च '**आइमज्झावसाणे**' आदिमध्यावसाने '**सअट्ठं सहेउं सकारण अहीणमइरित्तं**' सार्थं सहेतुक सकारणमहीनमतिरिक्तम् प्रतिसेवितानुसारं सर्वं प्रायश्चित्तरूपेण दातव्यं न किमपि त्यक्तव्यम् '**तेण पर दो मासा**' तेन परं द्वौ मासौ तत· पर सर्वं द्वौ मासौ प्रायश्चित्तरूपेण भवत· । द्व्यर्धमासिकप्रायश्चित्ते आरोपणाया· पक्ष· समेल्यते तदा परिपूर्णौ द्वौ मासौ जायेते इति भाव· ॥

**सूत्रम्—दोमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं अड्ढाइज्जा मासा ॥ सू० ३९ ॥**

**छाया– द्वैमासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा मासिक परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतु सकारणम् अहीनमतिरिक्त तेन परम् सार्धद्वितीयौ मासौ ॥ सू० ३९॥**

चूर्णी—'दोमासियं' इत्यादि । 'दोमासियं परिहारट्ठाणं' द्वैमासिकं पूर्वसूत्रसंप्राप्तं परिहारस्थानम् 'पट्ठविए अणगारे' प्रस्थापितोऽनगारः इत्यादि व्याख्या स्पष्टा । अत्र विशेषस्त्वयम् यदा द्वैमासिकपरिहारस्थानसेवनायां पाक्षिकी आरोपणा संमेल्यते तदा 'अड्ढाइज्जा दोमासा' अर्धतृतीयौ द्वौ मासौ प्रायश्चित्तरूपेण भवत इति ॥ सू० ३९ ॥

सूत्रम्—अड्ढाइज्जमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं तिण्णि मासा ॥ सू० ४० ॥

छाया—सार्धद्वैमासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतु सकारणमहीनमतिरिक्तं तेन परं त्रयो मासा ॥सू० ४०॥

चूर्णी—'अड्ढाइज्जमासियं' इत्यादि । 'अड्ढाइज्जमासियं' अर्धतृतीयमासिकम् सार्धमासद्वयं पूर्वसूत्रसंप्राप्तम् 'परिहारट्ठाणं' परिहारस्थानं प्रति 'पट्ठविए' प्रस्थापितोऽनगारः, इत्यादि व्याख्या प्राग्वत्, अत्र सार्धद्वैमासिकपरिहारस्थानप्रतिसेवनायां पाक्षिकी आरोपणा संमेल्यते तदा 'तिण्णि मासा' त्रयो मासाः प्रायश्चित्तरूपेण भवन्तीति ॥ सू० ४० ॥

सूत्रम्—तेमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं अद्धुट्ठा मासा ॥ सू० ४१ ॥

छाया—त्रैमासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्तं तेन परम् अर्धचतुर्था मासाः ॥ सू० ४१॥

चूर्णी—'तेमासियं' इत्यादि । 'तेमासियं परिहारट्ठाणं पट्ठविए' त्रैमासिकं पूर्वसूत्रसंप्राप्तं परिहारस्थानं प्रस्थापितोऽनगारः, शेषं पूर्ववत्, अत्र सर्वं प्रायश्चित्तम् 'अद्धुट्ठामासा' इति अर्धचतुर्थाः, चतुर्थः अर्धो यत्र ते अर्धचतुर्थाः—सार्धास्त्रयो मासा भवन्ति, यदा त्रिषु मासेषु पाक्षिकी आरोपणा संमेल्यते तदा सार्धास्त्रयो मासाः प्रायश्चित्तरूपेण भवन्तीति भावः ॥ सू० ४१ ॥

सूत्रम्—अद्धुट्ठमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं, चत्तारि मासा ॥ सू० ४२ ॥

छाया—अर्धचतुर्थमासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्तं तेन परं चत्वारो मासाः ॥ सू० ४२ ।

चूर्णी—अस्याप्यर्थः पूर्वसूत्रवदेव ज्ञातव्यः, विशेषस्त्वयम्—'अद्धुट्ठमासियं' अर्धचतुर्थमासिकम्-सार्धत्रैमासिकं-यत् पूर्वसूत्रे संप्राप्तं तत् प्रति तत्र प्रस्थापितोऽनगारः, इत्यादि पूर्ववद् व्याख्येयम्, 'तेण परं' तदनन्तरं सर्वं प्रायश्चित्तं 'चत्तारि मासा' चत्वारो मासा भवन्ति। यदा सार्धेषु त्रिषु मासेषु पाक्षिकी आरोपणा समेल्यते तदा परिपूर्णाश्चत्वारो मासाः प्रायश्चित्तरूपेण भवन्तीति भावः ॥ सू० ४२ ॥

सूत्रम्—चाउम्मासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं अड्ढपंचमा मासा ॥ सू० ४३ ॥

छाया—चातुर्मासिकं परिहारस्थानं प्रस्थापितोऽनगारोऽन्तरा मासिकं परिहारस्थानम् प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतु सकारणमहीनमतिरिक्तं तेन परम् अर्द्धपञ्चमा मासाः ॥ सू० ४३॥

चूर्णी—'चाउम्मासियं' इत्यादि । 'चाउम्मासियं परिहारट्ठाणं पट्ठविए अणगारे' चातुर्मासिकं पूर्वसूत्रसंप्राप्तं परिहारस्थानम् 'पट्ठविए' प्रस्थापितः—तादृशप्रायश्चित्ते नियोजितः 'अणगारे' अनगारो भिक्षुकः, शेषं पूर्ववद् व्याख्येयम्, अत्र सर्वं प्रायश्चित्तम्-चतुर्षु मासेषु पाक्षिकी आरोपणायाः संमेलनेन 'अड्ढपंचमा मासा' इति अर्द्धः पञ्चमो यत्र ते अर्द्धपञ्चमाः, एतादृशा मासाः सार्धाश्चत्वारो मासा भवन्तीति भावः ॥ सू० ४३॥

सूत्रम्—अड्ढपंचममासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेणपरं पंच मासा ॥ सू० ४४॥

छाया—अर्द्धपञ्चममासिक परिहारस्थान प्रस्थापितोऽनगारोऽन्तरा मासिक परिहारस्थान प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतुं सकारणमहीनमतिरिक्त तेन परं पञ्च मासाः ॥ सू० ४४॥

चूर्णी--'अद्धपंचममासियं' इत्यादि । 'अद्धपंचममासियं' अर्द्धपञ्चममासिकम् चत्वारो मासा' सपूर्णा पञ्चममासस्यार्द्धो भाग इति अर्द्धपञ्चममासिकं यत् पूर्वसूत्रे संप्राप्त तत् इत्यादि व्याख्यान पूर्ववत् कर्तव्यम्, केवलं तेन परम्–ततः पश्चात्–अत्रापि अर्धपञ्चममासेषु इति सार्धेषु चतुर्षु मासेषु यदि पाक्षिकी आरोपणा संमेल्यते तदा परिपूर्णाः पञ्च मासा प्रायश्चित्तरूपेण भवन्तीति भावः ॥ सू० ४४ ॥

**सूत्रम्—पंचमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरोवणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं अड्ढछट्ठा मासा ॥ सू० ४५ ॥**

छाया—पाञ्चमासिक परिहारस्थान प्रस्थापितोऽनगार' अन्तरा मासिक परिहारस्थान प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतु सकारणमहीनमतिरिक्त तेन परमर्द्धषष्ठा मासाः ॥ सू० ४५॥

चूर्णी--'पंचमासियं' इत्यादि । 'पंचमासियं परिहारट्ठाणं' पाञ्चमासिकं यत्पूर्वसूत्र-संप्राप्त तत् परिहारस्थानं प्रस्थापितोऽनगारः, इत्यादि सर्वं पूर्ववदेव व्याख्येयम् । अत्र पञ्चसु मासेषु पाक्षिकी आरोपणा संमेल्यते तदा 'अड्ढछट्ठा मासा' इति अर्द्धषष्ठा मासाः—सार्द्धाः पञ्च-मासाः प्रायश्चित्तरूपेण भवन्तीति भाव' ॥ सू० ४५ ॥

**सूत्रम्—अद्धछट्ठमासियं परिहारट्ठाणं पट्ठविए अणगारे अंतरा मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अहावरा पक्खिया आरो-वणा आइमज्झावसाणे सअट्ठं सहेउं सकारणं अहीणमइरित्तं तेण परं छम्मासा ॥ सू० ४६ ॥**

॥ निसीहज्झयणे वीसइमो उद्देसो समत्तो ॥२०॥

छाया—अर्द्धषष्ठमासिक परिहारस्थान प्रस्थापितोऽनगारोऽन्तरा मासिक परिहारस्थान प्रतिसेव्य आलोचयेत् अथापरा पाक्षिकी आरोपणा आदिमध्यावसाने सार्थं सहेतु सकारणमहीनमतिरिक्त तेन परं षण्मासाः ॥ सू० ४६॥

॥ निशीथाध्ययने विंशतितमोद्देशकः समाप्तः ॥२०॥

चूर्णी—'अद्धछट्ठमासियं' इत्यादि । 'अद्धछट्ठमासियं' अर्धषष्ठमासिकम्, पञ्च मासाः संपूर्णाः षष्ठमासस्य अर्द्धो भागः, इत्येवमर्द्धाधिकं पाञ्चमासिकं परिहारस्थानमित्येवं क्रमेण प्रकृतसूत्रस्य व्याख्यानं कर्तव्य केवलं तत परमिति ततः पश्चात् अर्द्धषष्ठमासेषु—सार्धेषु पञ्चसु मासेषु पाक्षिकी आरोपणा संमेल्यते तदा परिपूर्णा षड् मासाः प्रायश्चित्तरूपेण भवन्ति, नास्ति षण्मासानन्तरं प्रायश्चित्तमिति भावः ॥ सू० ४६ ॥

इति श्री—विश्वविख्यात—जगद्वल्लभ—प्रसिद्धवाचक—पञ्चदशभाषाकलितललितकलापालापक
प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक—वादिमानमर्दक—श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-
"जैनशास्त्राचार्य"-पदभूषित—कोल्हापुरराजगुरु—बालब्रह्मचारि—जैनाचार्य—जैन-
धर्मदिवाकर—पूज्यश्री—घासीलालव्रति—विरचितायां "निशीथसूत्रस्य"
चूर्णिभाष्यावचूरिरूपायां व्याख्यायाम् विंशतितमोद्देशकः समाप्तः ॥२०॥

# निशीथसूत्रस्य किञ्चित् शुद्धिपत्रम्

| पृष्ठ | पंक्ति | उ.१ अशुद्धिः | शुद्धिः |
|---|---|---|---|
| २ | ८ | . प्रतिपादिकानि | प्रतिपादकानि |
| ९ | १५–१६ | सुत्तरज्जुवक्केहिं च, दंडकडगेहिं तहा, चिलिमिली खु पचहा, भिक्खुहिं करणिज्जा नो ॥ | सुत्तरज्जुवकलेहिं, दंडकडगेहिं तहा, चिलिमिली पंचहा खु कायधा- भिक्खुहिं न सा ॥ |
| ९ | १७–१८ | सूत्ररज्जुवल्कलैश्च, दण्ड- कटकैस्तथा । चिलिमिली खलु पचदा, भिक्षुभिः क्रिय माणा नो ॥ | सूत्ररज्जुवल्कलै:, दण्ड- कटकाभ्यां तथा । चिलिमिली पञ्चधा खलु कर्त्तव्याभिक्षु- भिर्न सा ॥ |
| ९ | २४ | बंशो दंडादिः, कटकमयी जवनिका, ताभ्यां वंशकटकादिभ्यां | बंशो दण्डादिः, कटकं वशत्वक्, ताभ्यां बंशकटकाभ्यां |
| १२८ | १७ | उ ४... १३३ | ....१३६ |
|  | २१ | गमस्त्रिपञ्चाशत्सूत्रात्मकः | गमः षट्पञ्चाशत्सूत्रात्मकः । |
|  | २२ | त्रयस्त्रिंशदधिकशततमं | षट्त्रिंशदधिकशततमं |
|  | २३ | त्रिपञ्चाशत्सूत्रसमुदायोऽत्र | षट्पञ्चाशत्सूत्रसमुदायोऽत्र |
|  | २७ | ॥ सू० १३३॥ | ॥ सू० १३६॥ |
|  | २९ | ॥ सू० १३३॥ | ॥ सू० १३६॥ |
| २६५ | ८ | १२–६३ | १२–६६ |
|  | १५ | पादामार्जनसूत्रादारभ्य त्रिषष्टितमशीर्षदौवारिकासूत्रपर्यन्त- सूत्राणि | पादामार्जनषोडशतमसूत्रादारभ्य एकसप्तति- तमशीर्षदौवारिकासूत्रपर्यन्तषट्पञ्चाशत् सूत्राणि |
| २६५ | १६ | १२–६३ | १२–६६ । आगे उद्देशसमाप्तितक तीन तीन संख्या बढ़ाते जाओ । |
| २६५ | १६ | ॥ सू० ५–९॥ | ॥ सू० ५–११॥ |
| २६५ | २० | सूत्रपञ्चकं | सूत्रसप्तकं |

। श्रीवीतरागाय नमः ।

# ॥ निशीथसूत्रस्य मूलपाठः ॥

## ॥ प्रथमोद्देशकः ॥

जे भिक्खू हत्थकम्मं करेइ करंतं वा साइज्जइ ॥१॥

जे भिक्खू अंगादाणं कट्ठेण वा किलिंचेण वा अंगुलियाए वा सिलागाए वा संचालेइ संचालंतं वा साइज्जइ ॥२॥

जे भिक्खू अंगादाणं संवाहेज्ज वा पलिमद्देज्ज वा संवाहंतं वा पलिमद्दंतं वा साइज्जइ ॥३॥

जे भिक्खू अंगादाणं तेल्लेण वा घएण वा वसाए वा णवणीएण वा अब्भंगेज्ज वा मक्खेज्ज वा, अब्भंगेंतं वा मक्खेंतं वा साइज्जइ ॥४॥

जे भिक्खू अंगादाणं कक्केण वा लोद्धेण वा पउमचुण्णेण वा ण्हाणेण वा सिणाणेण वा चुण्णेहिं वा उव्वट्टेइ परिवट्टेइ उव्वट्टंतं वा परिवट्टंतं वा साइज्जइ ॥५॥

जे भिक्खू अंगादाणं सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा पधोवेज्ज वा उच्छोलंतं वा पधोवंतं वा साइज्जइ ॥६॥

जे भिक्खू अंगादाणं णिच्छलेइ णिच्छलंतं वा साइज्जइ ॥७॥

जे भिक्खू अंगादाणं जिग्घइ जिग्घंतं वा साइज्जइ ॥८॥

जे भिक्खू अंगादाणं अण्णयरंसि अचित्तंसि सोयंसि अणुप्पवेसित्ता सुक्कपोग्गले णिग्घाएइ णिग्घायंतं वा साइज्जइ ॥९॥

जे भिक्खू सचित्तं गधं जिग्घइ, जिग्घंतं वा साइज्जइ ॥१०॥

जे भिक्खू सचित्तपइट्ठियं गंधं जिग्घइ जिग्घंत वा साइज्जइ ॥११॥

जे भिक्खू पदमग्गं वा संकमं वा अवलंबणं वा अण्णउत्थिएण वा गारत्थिएण वा कारेइ कारंतं वा साइज्जइ ॥१२॥

जे भिक्खू दगवीणियं वा अण्णउत्थिएहिं वा गारत्थिएहिं वा कारेइ कारेंत वा साइज्जइ ॥१३॥

जे भिक्खू सिक्कगं वा सिक्कगणंतगं वा अण्णउत्थिएण वा गारत्थिएण वा कारेइ कारेंतं वा साइज्जइ ॥१४॥

जे भिक्खू सोत्तियं वा रज्जुयं वा चिलमिलिं वा अण्णउत्थिएण वा गारत्थिएण वा कारेइ कारेंतं वा साइज्जइ ॥१५॥

जे भिक्खू सूचीए उत्तरकरणं अन्नउत्थिएण वा गारत्थिएण वा कारेइ कारेंतं वा साइज्जइ ॥१६॥

जे भिक्खू पिप्पलगस्स उत्तरकरणं अन्नउत्थिएण वा गारत्थिएण वा कारेइ कारेंतं वा साइज्जइ ॥१७॥

जे भिक्खू नहच्छेयणगस्स उत्तरकरणं अन्नउत्थिएण वा गारत्थिएण वा कारेइ कारेंतं वा साइज्जइ ॥१८॥

जे भिक्खू कण्णसोहणगस्स उत्तरकरणं अन्नउत्थिएण वा गारत्थिएण वा कारेइ, कारेंतं वा साइज्जइ ॥१९॥

जे भिक्खू अणट्ठयाए सूइं जायइ, जायंतं वा साइज्जइ ॥२०॥

जे भिक्खू अणट्ठयाए पिप्पलगं जायइ, जायंतं वा साइज्जइ ॥२१॥

जे भिक्खू अणट्ठयाए कण्णसोहणगं जायइ, जायंतं वा साइज्जइ ॥२२॥

जे भिक्खू अणट्ठयाए णहच्छेयणगं जायइ, जायंतं वा साइज्जइ ॥२३॥

जे भिक्खू अविहीए सूइं जायइ, जायंतं वा साइज्जइ ॥२४॥

जे भिक्खू अविहीए पिप्पलगं जायइ, जायंतं वा साइज्जइ ॥२५॥

जे भिक्खू अविहीए नहच्छेयणगं जायइ, जायंतं वा साइज्जइ ॥२६॥

जे भिक्खू अविहीए कण्णसोहणगं जायइ, जायंतं वा साइज्जइ ॥२७॥

जे भिक्खू अप्पणो एगस्स अट्ठाए सूइं जाइत्ता अण्णमण्णस्स अणुप्पएइ, अणुप्पयंतं वा साइज्जइ ॥२८॥

जे भिक्खू अप्पणो एगस्स अट्ठाए पिप्पलगं जाइत्ता अण्णमण्णस्स अणुप्पएइ अणुप्पयंतं वा साइज्जइ ॥२९॥

जे भिक्खू एगस्स अट्ठाए नहच्छेयणगं जाइत्ता अण्णमण्णस्स अणुप्पएइ अणुप्पयंतं वा साइज्जइ ॥३०॥

जे भिक्खू अप्पणो एगस्स अट्ठाए कण्णसोहणगं जाइत्ता अण्णमण्णस्स अणुप्पएइ अणुप्पयंतं वा साइज्जइ ॥३१॥

जे भिक्खू पाडिहारियं सूइं जाइत्ता वत्थं सीविस्सामि–त्ति पायं सिव्वइ सिव्वंतं वा साइज्जइ ॥३२॥

जे भिक्खू पाडिहारियं पिप्पलगं जाइत्ता वत्थं छिंदिस्सामि–त्ति पायं छिंदइ, छिंदंतं वा साइज्जइ ॥३३॥

जे भिक्खू पाडिहारियं नहच्छेयणगं जाइत्ता नहं छिंदिस्सामि–त्ति सल्लुद्धरणं करेइ, करेंतं वा साइज्जइ ॥३४॥

जे भिक्खू पाडिहारियं कण्णसोहणगं जाइत्ता कण्णमलं णीहरिस्सामि–त्ति दंत-मलं वा नहमलं वा णीहरेइ णीहरंतं वा साइज्जइ ॥३५॥

जे भिक्खू अविहीए सूइं पच्चप्पिणइ पच्चप्पिणंतं वा साइज्जइ ॥३६॥

जे भिक्खू लाउपायं वा दारुपायं वा मट्टियापायं वा अण्णउत्थिएण वा गार-त्थिएण वा परिघट्टावेइ वा संठवेइ वा जमावेइ वा अलमप्पणो करणयाए सुहुममवि नो कप्पइ जाणमाणे सरमाणे अण्णमण्णस्स वियरइ वियरंतं वा साइज्जइ ॥४०॥

जे भिक्खू दंडयं वा लट्टियंवा अवलेहणियं वा वेणुसूइयं वा अन्नउत्थिएण वा गारत्थिएण वा परिघट्टावेइ वा संठवेइ वा जमावेइ वा अलमप्पणो करणयाए सुहुम मवि नो कप्पइ जाणमाणे सरमाणे अण्णमण्णस्स वियरइ वियरंतं वा साइज्जइ ॥४१॥

जे भिक्खू पायस्स एगं तुडियं तुडेइ तुडंतं वा साइज्जइ ॥४२॥

जे भिक्खू पायस्स परं तिण्हं तुडियाणं तुडेइ तुडंतं वा साइज्जइ ॥४३॥

जे भिक्खू पायं अविहीए तुडेइ तुडंतं वा साइज्जइ ॥४४॥

जे भिक्खू पायं अविहीए बंधइ बंधंतं वा साइज्जइ ॥४५॥

जे भिक्खू पायं एगेण बंधेण बंधइ, बंधंतं वा साइज्जइ ॥४६॥

जे भिक्खू पायं परं तिण्हं बंधाणं बंधइ, बंधंतं वा साइज्जइ ॥४७॥

जे भिक्खू अइरेगबंधणं पायं दिवड्ढाओ मासाओ परेण धरइ धरंतं वा साइज्जइ ॥

जे भिक्खू वत्थस्स एगं पडियाणियं देइ, देयंतं वा साइज्जइ ॥ सू० ४९ ॥

जे भिक्खू वत्थस्स परं तिण्हं पडियाणियाणं देइ देयंतं वा साइज्जइ ॥५०॥

जे भिक्खू अविहीए वत्थं सिव्वइ सिव्वंतं वा साइज्जइ ॥५१॥

जे भिक्खू वत्थस्स एगं फलियं गंठियं करेइ करेंतं वा साइज्जइ ॥५२॥

जे भिक्खू वत्थस्स परं तिण्हं फलियगंठियाणं करेइ करेंतं वा साइज्जइ ॥५३॥

जे भिक्खू वत्थस्स एगं विफलियगंठियं देइ देयंतं वा साइज्जइ ॥५४॥

जे भिक्खू वत्थस्स परं तिण्हं विफलियगंठियाणं देइ देयंतं वा साइज्जइ ५५॥

जे भिक्खू वत्थं अविहीए गंठइ गंठतं वा साइज्जइ ॥५६॥

जे भिक्खू वत्थं अतज्जाएणं गंठेइ गंठेंतं वा साइज्जइ ॥५७॥

जे भिक्खू अइरेगगहियं वत्थं परं दिवढाओ मासाओ धरेइ धरेंत वा साइज्जइ।

जे भिक्खू गिहधूमं अण्णउत्थिएण वा गारत्थिएण वा परिसाडावेइ परिसाडावेंतं वा साइज्जइ ॥५९॥

जे भिक्खू पूइकम्मं भुंजइ भुंजंतं वा साइज्जइ ॥६०॥

तं सेवमाणे आवज्जइ मासियं परिहारट्ठाणं अणुग्घाइयं ॥६१॥

॥ निसीहज्झयणे पढमो उद्देसो समत्तो ॥१॥

## ॥ द्वितीयोद्देशकः ॥

जे भिक्खू दारुदंडयं पायपुंछणं करेइ करेंतं वा साइज्जइ ॥१॥
जे भिक्खू दारुदंडयं पायपुंछणं गेण्हइ गेण्हंतं वा साइज्जइ ॥२॥
जे भिक्खू दारुदंडयं पायपुंछणं धरेइ धरेंतं वा साइज्जइ ॥३॥
जे भिक्खू दारुदंडयं पायपुछणं वियरइ वियरंतं वा साइज्जइ ॥४॥
जे भिक्खू दारुदंडयं पायपुंछणं परिभाएइ परिभाएंतं वा साइज्जइ ॥५॥
जे भिक्खू दारुदंडयं पायपुंछणं परिभुजइ परिभुंजंतं वा साइज्जइ ॥६॥
जे भिक्खू दारुदंडयं पायपुंछणं पर दिवड्ढाओ मासाओ धरेइ धरेंतं वा साइज्जइ।
जे भिक्खू दारुदंडयं पायपुछणं विसुयावेइ विसुयावेंतं वा साइज्जइ ॥८॥
जे भिक्खू अचित्तपइट्ठियं गंधं जिग्घइ जिग्घंतं वा साइज्जइ ॥९॥
जे भिक्खू पदमग्गं वा संकमं वा आलंबणं वा सयमेव करेइ करेंतं वा साइज्जइ।
जे भिक्खू दगवीणियं सयमेव करेइ करेंतं वा साइज्जइ ॥११॥
जे भिक्खू सिक्कगं वा सिक्कगणतगं वा सयमेव करेइ करेंतं वा साइज्जइ ॥१२॥
जे भिक्खू सोत्तियं वा रज्जुयं वा चिलमिलिं सयमेव करेइ करेंतं वा साइज्जइ।
जे भिक्खू सूईए उत्तरकरणं सयमेव करेइ करेतं वा साइज्जइ ॥१४॥
एवं पिप्पलगस्स उत्तरकरणम् ॥१५॥ णहच्छेयणगस्स उत्तरकरणम् ॥१६॥
कण्णसोहणगस्स उत्तरकरणम् ॥१७॥

जे भिक्खू लहुस्सगं फरुसं वयइ वयंत वा साइज्जइ ॥१८॥
जे भिक्खू लहुस्सगं मुसं वयइ वयंतं वा साइज्जइ ॥१९॥
जे भिक्खू लहुस्सगं अदत्तमादियइ आदियंतं वा साइज्जइ ॥२०॥

जे भिक्खू लहुस्सएण सीओदगवियडेण वा उसिणोदगवियडेण वा हत्थाणि वा पायाणि वा कण्णाणि वा अच्छीणि वा दंताणि वा नहाणि वा मुहं वा उच्छोलेज्ज वा पधोवेज्ज वा उच्छोलेंतं वा पधोवेंतं वा साइज्जइ ॥२१॥

जे भिक्खू कसिणाणि चम्माइं धरेइ धरेंतं वा साइज्जइ ॥२२॥
जे भिक्खू कसिणाणि वत्थाइं धरेइ धरेंतं वा साइज्जइ ॥२३॥
जे भिक्खू अभिण्णाइ वत्थाइं धरेइ धरेंतं वा साइज्जइ ॥२४॥

जे भिक्खू लाउपायं वा दारुपायं वा मट्टियापायं वा सयमेव परिघट्टेइ वा संठवेइ वा जमावेइ वा परिघट्टेंतं वा संठवेंतं वा जमावेंतं वा साइज्जइ ॥२५॥

जे भिक्खू दंडयं वा लट्ठिय वा अवलेहणियं वा वेणुसूइयं वा सयमेव परिघट्टेइ वा संठवेइ वा जमावेइ वा परिघट्टेतं वा संठवेंतं वा जमावेंतं वा साइज्जइ ॥२६॥

जे भिक्खू णियगगवेसिय पडिग्गहं धरेइ धरेंतं वा साइज्जइ ॥२७॥

जे भिक्खू परगवेसियं पडिग्गहं धरेइ धरेंतं वा साइज्जइ ॥२८॥

जे भिक्खू वरगवेसियं पडिग्गहं धरेइ धरेंत वा साइज्जइ ॥२९॥

जे भिक्खू बलगवेसियं पडिग्गहं धरेइ धरेंतं वा साइज्जइ ॥३०॥

जे भिक्खू लवगवेसियं पडिग्गहं धरेइ धरंतं वा साइज्जइ ॥३१॥

जे भिक्खू णितियं अग्गपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥३२॥

जे भिक्खू णितियं पिंडं भुंजइ भुंजंत वा साइज्जइ ॥३३॥

जे भिक्खू णितियं अवड्ढभागं भुंजइ भुंजंतं वा साइज्जइ ॥३४॥

जे भिक्खू णितियं भागं भुंजइ भुंजंतं वा साइज्जइ ॥३५॥

जे भिक्खू णितियं ऊणड्ढभागं भुंजइ भुजंतं वा साइज्जइ ॥३६॥

जे भिक्खू णितियं वासं वसइ वसंतं वा साइज्जइ ॥३७॥

जे भिक्खू पुरेसंथवं वा पच्छासंथवं वा करेइ करेंतं वा साइज्जइ ॥३८॥

जे भिक्खू समाणे वा वसमाणे वा गामाणुगामं दूइज्जमाणे वा पुरेसंथुयाणि वा पच्छासंथुयाणि वा कुलाइं पुव्वामेव अणुप्पविसित्ता पच्छा भिक्खायरियाए अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ॥३९॥

जे भिक्खू अण्णउत्थिएण वा गारत्थिएण वा परिहारिओ वा अपारिहारिएण सद्धिं गाहावइकुलं पिंडवायपडियाए णिक्खमइ वा अणुप्पविसइ वा, णिक्खमंतं वा अणुप्पविसंतं वा साइज्जइ ॥४०॥

जे भिक्खू अण्णउत्थिएण वा गारत्थिएण वा परिहारिओ वा अपारिहारिएण सद्धिं बहिया वियारभूमिं वा विहारभूमिं वा णिक्खमइ वा पविसइ वा, णिक्खमंतं वा पविसंतं वा साइज्जइ ॥४१॥

जे भिक्खू अण्णउत्थिएण वा गारत्थिएण वा परिहारिओ वा अपारिहारिएण सद्धिं गामाणुगामं दूइज्जइ दूइज्जंतं वा साइज्जइ ॥४२॥

जे भिक्खू अन्नयरं भोयणजायं पडिग्गाहित्ता सुब्भिं भुंजइ दुब्भिं परिट्ठवेइ, परिट्ठवेंतं वा साइज्जइ ॥४३॥

जे भिक्खू अन्नयरं पाणगजायं पडिग्गाहित्ता पुप्फगं-पुप्फगं आवियइ कसायं-कसायं परिट्ठवेइ परिट्ठवेतं वा साइज्जइ ॥४४॥

जं भिक्खू मणुण्णं भोयणजायं पडिग्गाहेत्ता बहुपरियावन्नं सिया अदूरे तत्थ साहम्मिया संभोइया समणुन्ना अपारिहारिया संता परिवसंति ते अणापुच्छिय अणिमंतिय परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥४५॥

जे भिक्खू सागारियपिंड गिण्हइ, गिण्हतं वा साइज्जइ ॥४६॥

जे भिक्खू सागारियपिंडं भुंजइ भुंजंत वा साइज्जइ ॥४७॥

जे भिक्खू सागारियकुलं अजाणिय अपुच्छिय अगवेसिय पुव्वामेव पिंडवायपडियाए अणुप्पविसइ अणुप्पविसंत वा साइज्जइ ॥४८॥

जे भिक्खू सागारियणीसाए असणं वा पाणं वा खाइमं वा साइमं वा वा ओभासिय ओभासिय जायइ जायंतं वा साइज्जइ ॥४९॥

जे भिक्खू उउबद्धिय सेज्जासंथारगं पर पज्जोवसणाओ उवाइणावेइ उवाइणावेंतं वा साइज्जइ ॥५०॥

जे भिक्खू वासावासियं सेज्जासंथारय पर दसरायकप्पाओ उवाइणावेइ उवाइणावेतं वा साइज्जइ ॥५१॥

जे भिक्खू उउबद्धिय वा वासावासिय वा सेज्जासंथारगं उव्वरिसिज्जमाणं पेहाए न ओसारेइ न ओसारेंतं वा साइज्जइ ॥५२॥

जे भिक्खू पाडिहारियं सेज्जासंथारगं दोच्चंपि अणणुण्णवेत्ता बाहिं णीणेइ णीणेत वा साइज्जइ ॥५३॥

जे भिक्खू सागारियसंतियं सेज्जासंथारगं दोच्चंपि अणणुण्णवेत्ता बाहिं णीणेइ णीणेंतं वा साइज्जइ । सू० ५४ ॥

जे भिक्खू पाडिहारियं सागारियसंतियं वा सेज्जासंथारगं दोच्चंपि अणणुण्णवेत्ता बाहिं णीणेइ णीणेतं वा साइज्जइ ॥५५॥

जे भिक्खू पाडिहारियं सेज्जासंथारयं आदाए अपडिहट्टु संपव्वयइ संपव्वयंतं वा साइज्जइ ॥५६॥

जे भिक्खू सागारियसंतियं सेज्जासंथारयं आयाए अविगरण कट्टु अणप्पिणित्ता सपव्वयइ संपव्वयंत वा साइज्जइ ॥५७॥

जे भिक्खू पाडिहारियं वा सागारियसंतियं वा सेज्जासंथारगं विप्पणट्टं न गवेसइ न गवेसंतं वा साइज्जइ ॥५८॥

जे भिक्खू इत्तरियंपि उवहिं ण पडिलेहइ ण पडिलेहंतं वा साइज्जइ ॥५९॥

तं सेवमाणे आवज्जइ मासियं परिहारट्ठाणं उग्घाइयं ॥६०॥

॥ निसीहज्झयणे बीओ उद्देसो समत्तो ॥ २ ॥

## ॥ तृतीयोद्देशकः ॥

जे भिक्खू आगंतागारेसु वा, आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा अण्णउत्थियं वा गारत्थियं वा असणं वा पाणं वा खाइमं वा साइमं वाओभासिय-ओभासिय जायइ, जायंतं वा साइज्जइ ॥१॥

जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा, परियावसहेसु वा अण्णउत्थियाओ वा गारत्थियाओ वा असणं वा पाणं वा खाइमं वा साइमं वा ओभासिय-ओभासिय जायइ जायंतं वा साइज्जइ ॥२॥

जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा अण्णउत्थिणिं वा गारत्थिणिं वा असण वा पाणं वा खाइमं वा साइमं वा ओभासिय-ओभासिय जायइ जायंतं वा साइज्जइ ॥३॥

जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा अण्णउत्थिणीओ वा गारत्थिणीओ वा असण वा पाण वा खाइम वा साइम वा ओभासिय-ओभासिय जायइ जायंतं वा साइज्जइ ॥४॥

जे भिक्खू आगंतागारेसु वा, आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा अण्णउत्थियं वा, गारत्थियं वा, कोउहलवडियाए पडियागयं समाणं असणं वा पाणं वा, खाइमं वा साइम वा ओभासिय-ओभासिय जायइ जायतं वा साइज्जइ ॥५॥

जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा कोऊहलवडियाए पडियागया समाणा अण्णउत्थिया वा गारत्थिया वा असणं वा, पाणं वा, खाइमं वा साइमं वा ओभासिय-ओभासिय जायइ, जायंतं वा साइज्जइ ॥

जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा कोऊहलवडियाए पडियागयं समाणं अण्णउत्थिणिं वा गारत्थिणिं वा असणं वा पाणं वा खाइमं वा साइमं वा ओभासिय-ओभासिय जायइ जायंत वा साइज्जइ ॥

जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा कोऊहलवडियाए पडियागया समाणा अण्णउत्थिणीओ वा गारत्थिणीओ वा असणं वा पाणं वा खाइमं वा साइमं वा ओभासिय-ओभासिय जायइ, जायंतं वा साइज्जइ ॥ सू०८॥

जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा अण्णउत्थिएण वा गारत्थिएण वा असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दिज्जमाणं पडिसेहेत्ता तमेव अणुवत्तिय-अणुवत्तिय परिवेढिय-परिवेढिय परिजविय-परिजविय ओभासिय-ओभासिय जायइ, जायंतं वा साइज्जइ ।।९।।

जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा अण्णउत्थिएहिं वा गारत्थिएहिं वा, असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दिज्जमाणं पडिसेहेत्ता तमेव अणुवत्तिय-अणुवत्तिय, परिवेढिय-परिवेढिय, परिजविय-परिजविय; ओभासिय-ओभासिय जायइ जायंत वा साइज्जइ ।।

जे भिक्खू आगतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा अण्णउत्थिणीए वा गारत्थिणीए वा असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दिज्जमाणं पडिसेहेत्ता तमेव अणुवत्तिय-अणुवत्तिय परिवेढिय-परिवेढिय परिजविय-परिजविय ओभासिय-ओभासिय जायइ जायंतं वा साइज्जइ ।।११।।

जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा अण्णउत्थिणीहिं वा गारत्थिणीहिं वा असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दिज्जमाणं पडिसेहेत्ता ताओ अणुवत्तिय-अणुवत्तिय परिवेढिय-परिवेढिय परिजविय-परिजविय ओभासिय-आसासिय जायइ जायंतं वा साइज्जइ ।।१२।।

जे भिक्खू गाहावइकुलं पिंडवायपडियाए पविट्ठे पडियाइक्खिए समाणे दोच्चंपि तमेव कुलं अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ।।१३।।

जे भिक्खू संखडिपलोयणाए असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ।। १४ ।।

जे भिक्खू गाहावइकुलं पिंडवायपडियाए अणुप्पविट्ठे समाणे परं तिघरंतराओ असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ।।१५।।

जे भिक्खू अप्पणो पाए आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्जइ ।।१६।।

जे भिक्खू अप्पणो पाए संवाहेज्ज वा पलिमद्देज्ज वा संवाहेंतं वा पलिमद्देंतं वा साइज्जइ ।।१७।।

